अथ

# नृसिंहकवचप्रारंभः ॥



२५०

श्रीमतेरामानुजायनमः ॥ ॥ नृसिंहक
वचंवक्ष्येप्रह्लादेनोदितंपुरा ॥ सर्वरक्षा
करंपुण्यं सर्वोपद्रवनाशनम् ॥ १ ॥ स
र्वसम्पत्करंचैवस्वर्गमोक्षप्रदायकम् ॥
ध्यात्वानृसिंहंदेवेशंहेमसिंहासनस्थि
तम् ॥ २ ॥ विवृतास्यंत्रिनयनंशरदि
न्दुसमप्रभम् ॥ लक्ष्म्यालिङ्गितवामा
ङ्गंविभूतिभिरुपाश्रितम् ॥ ३ ॥ चतुर्भु

नृ० जंकोमलाङ्गं स्वर्णकुण्डलशोभितम् ॥ क०
२ उरोजशोभितोरस्कं रत्नकेयूरमुद्रित
मू ॥ ४ ॥ तप्तकाञ्चनसंकाशं पीतनि
र्मलवाससम् ॥ इन्द्रादिसुरमौलिस्थ
स्फुरन्माणिक्यदीप्तिभिः ॥ ५ ॥ विरा
जितपदद्वन्द्वं शङ्खचक्रादिहेतिभिः ॥ ग
रुत्मताच विनयात्स्तूयमानं मुदान्वि २
तम् ॥ ६ ॥ स्वहृत्कमलसंवासं कृत्वा

तुकवच्चम्पठेत् ॥ नृसिंहोमेशिरःपातु
लोकरक्षात्मसम्भवः ॥ ७ ॥ सर्वगोपि
स्तम्भवासःफालम्मेरक्षतुध्वनिम् ॥ नृ
सिंहोमेदृशौपातुसोमसूर्याग्निलोचनः
॥ ८ ॥ स्मृतिम्मेपातुनृहरिर्मुनिवर्यस्तु
तिप्रियः ॥ नासाम्मेसिंहनासस्तुमुखं
लक्ष्मीमुखप्रियः ॥ ९ ॥ सर्वविद्याधि
पःपातु नृसिंहोरसनां मम ॥ वक्रंपा

त्विन्दुवदनःसदाप्रह्लादवन्दितः॥१०॥
नृसिंहःपातुमेकण्ठं स्कंधौभूभरणांत
कृत् ॥ दिव्यास्त्रशोभितभुजोनृसिंहः
पातुमेभुजौ ॥ ११ ॥ करौमेदेववरदो
नृसिंहःपातुसर्वतः॥ हृदयंयोगिसाध्य
श्चनिवासंपातुमेहरिः॥१२॥ मध्यंपा
तुहिरण्याक्षवक्षःकुक्षिविदारणः ॥ ना
भिंमेपातुनृहरिःस्वनाभिब्रह्मसंस्तुतः

॥ १३ ॥ ब्रह्माण्डकोटयः कट्यांयस्या
सौपातुमेकटिम् ॥ गुह्यंमेपातुगुह्यानां
मंत्राणांगुह्यरूपधृक् ॥ १४ ॥ ऊरूमनो
भवःपातुजानुनीनररूपधृक् ॥ जंघे
पातु धराभारहर्ता योऽसौ नृकेसरी ॥
॥ १५ ॥ सुरराज्यप्रदःपातुपादौमेनृहरी
श्वरः ॥ सहस्रशीर्षापुरुषःपातुमेसर्वश
स्तनुम् ॥ १६ ॥ महोग्रः पूर्वतः पातुम

हावीराग्रजोऽग्नितः ॥ महाविष्णुर्दक्षि
णेतुमहाज्वालस्तुनिर्ऋतौ ॥ १७ ॥ प
श्चिमेपातुसर्वेशोदिशिमेसर्वतोमुखः ॥
नृसिंहःपातुवायव्यां सौम्यांभूषणवि
ग्रहः ॥ १८ ॥ ईशान्यांपातुभद्रोमेसर्व
मङ्गलदायकः ॥ संसारभयदःपातुमृ
त्योर्मृत्युर्नृकेसरी॥१९ ॥ इदंनृसिंहक
वचंप्रह्लादमुखमण्डितम् ॥ भक्तिमा

न्यः पठेन्नित्यंसर्वपापैःप्रमुच्यते ॥२०॥
॥ पुत्रवान्धनवाँल्लोकेदीर्घायुरुपजाय
ते ॥ यंयंकामयतेकामंतंतंप्राप्नोत्यसं
शयम् ॥ २१ ॥ सर्वत्रजयमाप्नोतिसर्व
त्रविजयीभवेत् ॥ भूम्यन्तरिक्षादिव्या
नांग्रहाणांविनिवारणम् ॥ २२ ॥ वृश्चि
कोरगसम्भूतविषापहरणंपरम् ॥ ब्रह्म
राक्षसयक्षाणांदूरोत्सारणकारणम् ॥

॥ २३ ॥ भूर्जेवातालपत्रेवाकवचंलि
खितंशुभम् ॥ करमूलेधृतंयेनसिद्धचे
युःकर्मसिद्धयः ॥ २४ ॥देवासुरमनुष्ये
षुस्वंस्वमेवजयंलभेत् ॥ एकसन्ध्यं
त्रिसन्ध्यंवायःपठेन्नियतोनरः ॥ २५ ॥
॥ सर्वमङ्गलमाङ्गल्यं भुक्तिमुक्तिञ्चवि
न्दति ॥ द्वात्रिंशत्तुसहस्राणिशुद्धात्मा
यःपठेन्नरः ॥ २६ ॥ कवचस्यास्यमं

त्रस्यमंत्रासिद्धिःप्रजायते ॥ अनेनमंत्र
राजेनकृत्वाभस्माभिमन्त्रणम्॥२७॥
तिलकंविन्यसेद्यस्तु तस्यग्रहभयंहरे
त् ॥ त्रिवारंजपमानस्तुदत्तंवार्यभिम
न्त्र्यच॥२८॥ प्राशयेद्यंनरंमन्त्रंनृसिं
हध्यानमाचरेत् ॥ तस्यरोगाःप्रणश्य
न्तियेचस्युःकुक्षिसंभवाः ॥२९ ॥ कि
मत्रबहुनोक्तेननृसिंहसदृशोभवेत्॥ म

नृ० नसाच्चिन्तितंयत्तुसतत्त्वाप्नोत्यसंशयम् क०
६ ॥ ३० ॥ गर्जन्तङ्गर्जयन्तंनिजभुजपटलं
स्फोटयन्तंहरन्तंरूप्यन्तंतापयन्तं दि
विभुविदितिजं क्षेपयन्तंशिरन्तम् ॥ क्र
न्दन्तंरोषयन्तंदिशिदिशिसततंसंभर
न्तंहरन्तंवीक्षंतं घूर्णयन्तंकरनिकरश
तैर्दिव्यसिंहंनमामि ॥३१॥इति नृसिंह ६
कवचं समाप्तं श्रीनृसिंहप्रसादोस्तु ॥

इदं कवचं श्रीकृष्णदासात्मजखेमराजेन मुंबय्यां "श्रीवेंकटेश्वराख्य" स्वकीययंत्रालये आयसाक्षरैर्मुद्रितम् ॥ शकाब्दाः १८१८ श्री-विक्रमाब्दाः १९५३ ॥ श्रीरस्तु ॥

# अनुष्ठानमंत्रशास्त्र स्तोत्रपाठग्रंथाः ।

| नाम | की.रु.आ. |
| --- | --- |
| शाक्तप्रमोददशमहाविद्या और पांचों देवतोंका पंचांग द्वादशांग सहित इसमें १८४ विषयहैं शाक्तलोगोंको अवश्य लेना चाहिये ... | ५--० |
| नित्यतंत्रभाषाटीका(नैमित्तिक कर्मोंमें उपयोगी ) | ०--१२ |
| मंत्रमहोदधि सटीक सटिप्पण मातृकाकोष तथा अनुष्ठानिकयंत्रों समेत ... ... | ३--४ |
| महानिर्वाणतंत्रम् भाषाटीका समेतम् चौसठ तंत्रोंमें सर्वतंत्रोत्तमोत्तम है ... ... | २--० |
| माहेश्वरीतंत्र भाषाटीका ( मारण मोहन वशीक- | |

| नाम | की.रु,आ. |
| --- | --- |
| रण उच्चाटनादि विधि) वर्णितहै.... | ... ०–३ |
| कामशास्त्र भाषाटीका छपताहै ... | ... ०–० |
| इन्द्रजाल (संस्कृत और भाषा) मंत्र तंत्र मारण मोहन उच्चाटन वशीकरण प्रयोग और वैद्यक तथा समस्त कार्योंके सिद्ध करनेवाले १३८ यंत्रों समेत ... ... | ... ०–१२ |

पुस्तक मिलनेका ठिकाना–

खेमराज श्रीकृष्णदास,

"श्रीवेंकटेश्वर" छापाखाना–बंबई.

